☎ 24951402

உ

# THE SAMSKRIT EDUCATION SOCIETY (Regd) CHENNAI

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

President : Vaidya Sri S.V. Radhakrishna Sastri

Secretary & Treasurer : Sri G. SITHARAMAN, F.C.A.

Editor and Publisher Samskritasri : S. SRINIVASA SARMA
34, Senthamil Nagar,
Near : Indra Nagar & New Railway Station
Big Kancheepuram - 631 502
Cell : 90941 53190

---

பாடங்கள் நடத்துபவர்கள் :

1. ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை 24353597
2. ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், மேடவாக்கம் 9884158110
3. ஸ்ரீமதி சாந்தி அசோக் மந்தைவெளி 24951402
4. ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர் 24320544
5. ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை-95 65687635
6. ஸ்ரீமதீ பார்வதீ ராமசந்திரன் அண்ணா நகர் 26215719
7. ஸ்ரீ R. முத்து கிருஷ்ணன் கொரட்டூர் 26872430
8. ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் 22291720
9. ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் 9841212047
10. ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் 9962837319
11. ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் 9841403859
12. ஸ்ரீ S. அனந்தன் மதுராந்தகம் 9894709418
13. ஸ்ரீ P.R. சுப்ரமண்யம் K.K. நகர் 23640864
14. ஸ்ரீ N. ஜானகீ ராமசாஸ்த்ரீ I.T.I. கிண்டி 24953144
15. ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் 2430632
16. ஸ்ரீமதீ ராஜம் சுந்தர் திருநெல்வேலி 9488326850
17. ஸ்ரீ T.V. ஸ்ரீநிவாஸ தாதாசார்ய காஞ்சீபுரம் 27269153
18. ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் 9445703470
19. ஸ்ரீ R. ரங்கநாதன் காஞ்சீபுரம் 97910 55428
20. ஸ்ரீ C.A. ஏகாம்பரம் கோயம்புத்தூர் 0422-2233242
21. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, 0487-2382964
22. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், மும்பை (E) 09757115154

# संस्कृतश्रीः

मालाः : 36 JULY-2014 पुष्पम् 9

कलि : 5109 जय - आषाढमासे 36—9

The Samskrit Education Society Established with the blessings of His Holiness SRI MAHASWAMIGAL of Kanchi Kamakoti Peetam in the year 1957.

OFFICE:

Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028.

PRESENT ACTIVITIES

1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.





SUBSCRIPTION RATES

| | |
|---|---|
| ANNUAL : | Rs. 40/- |
| LIFE SUBSCRIPTION | Rs. 400/- |
| Page Donation | Rs. 200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer,

"DD/Cheque should be sent by Speed Post only"

The Samskrit Education Society (Regd.) . Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028. Ph: 044-2495 14 02

॥ श्रीः ॥

१. तञ्जापुरमण्डलान्तर्गतात् कुद्दालपुरान्नतिदूर-वर्तिगूढकाञ्चीग्रामाभिजनः,

२. श्रीकाञ्चीपरमाचार्येषु निर्भर-गाढभक्तिश्रद्धानां श्रीरामायणम् रामकृष्णशास्त्रिणां पूज्यपार्वत्यम्बायाश्च तनूजप्रवरः,

३. वेद-वेदान्त-शास्त्र-पुराणेतिहास-धर्मशास्त्रेषु प्रवीणः,

४. नैष्ठिक-सदाचारसम्पन्नः, महामहिमश्रीपरमाचार्याणां अनुज्ञयाऽधिगतास्थानविद्वत्पदः,

५. श्रीरामेश्वरक्षेत्रविराजमाने श्रीमदादिशङ्करमण्डपे प्रतिदिनं वेदभाष्य-प्रस्थानत्रयभाष्यादिषु अधीतिनां शताधिकानां माणवानां सन्यासिनां च पाठप्रवचनकर्ता,

६. नानासम्मान-विरुदालङ्कृतः

७. राष्ट्रपतिसम्मानसंभावितः, तिरुपतिदेवस्थानसगौरवाभ्यर्हण-पूर्णपात्रम् कुलदेवता-इष्टदेवतानां श्रीकाञ्चीकामकोटिपीठाध्यक्षाणां च परमकरुणया साक्षात्सम्पूर्णशताब्दसौभाग्यश्रिया संवलितश्च ब्रह्मश्री कूडलूर रामचन्द्रशास्त्री भक्तिसमुज्वलैः 'अस्मद्गुरुपञ्चरत्नैः' संसेवते स्वकीयान् आचार्यपादान्–

# श्रीकामकोटि-सद्गुरु-पञ्चरत्नम् ।

## (अस्मद्गुरु-पञ्चरत्नम्)

अस्मद्गुरुं शिवगुरोः शुभपुत्रवर्यं
श्रीमज्जगद्गुरुवरं युवशङ्करं तम् ।
श्रीकामकोटिवरपीठ-महागुरुं तं
स्वश्रेयसे हि सततं प्रणतोऽस्मि नित्यम् ।। १

अस्मद्गुरून्हि सततं प्रणमामि भक्त्या
अद्वैतशास्त्रशुभतत्वसुबोधकांस्तान् ।
श्रीशङ्करादि गुरुवर्य-समस्तशिष्यान्
श्रीकामकोटि-वर-पीठ महानुभावान् ।। २

अस्मद्गुरुं यतिवरं शुभचन्द्रमौळिं
शास्त्रार्थतत्वनिलयं परमात्मरूपम् ।
सञ्चारिणं च विदुषां महतां हि लोके
भक्त्या प्रणौमि परमात्मसुतत्वसिध्यै ।। ३

अस्मद्गुरोः प्रथमशिष्यमुदारभावम् ।
लोकोपकारकरणे हि दृढव्रतं तम् ।
श्रीमज्जयेन्द्रगुरुर्वयमहानुभावं
सर्वार्थ सिद्धिमुपलक्ष्य नमस्करोमि ।। ४

अस्मद्गुरोः प्रथमशिष्यविशिष्टशिष्यं
श्रीमद्गुरुं यतिवरं विजयेन्द्रवर्यम् ।
धर्मप्रचाररसिकं श्रुतिसौरभाढ्यं
गुरुप्रकाशकगुरुं प्रणमामि भक्त्या ।। ५

अस्मद्गुरूक्तिघटितैः स्तवपञ्चरत्नैः श्रीरामचन्द्रविबुधः स्वशताब्दपूर्तौ ।
श्रीकाञ्चिपीठमहनीयगुरून् प्रणम्य प्राचीनपुण्यफलमीप्सति कुम्भकोणे ।।

# मायाश्वीयम् ।

—मधुकरः ।

विश्वरङ्गे विजेतारं स्वीयैर्लीलाविशेषकैः ।

आश्रितानां पराधीनं वन्दे हालास्यसुन्दरम् ।।

(प्रविश्य सूत्रधारः) आर्यमिश्रा विदाङ्कुर्वन्तु - यदद्य वसन्तोत्सवः चैत्रोत्सवः इत्यादिविशेषोत्सवाः पाण्ड्यचोलदेशेषु साघोषं प्रचाल्यमानास्सन्ति । उल्लासयात्रिणः विरामकालं प्राप्य स्वस्वकुटुम्बानुगताः सञ्चरन्ति । तेषां विनोदनार्थं रङ्गाधिकारिणः आज्ञापयन्ति - सुमनोविनोदकं किंचिद्दर्शनीयं रङ्गेषु प्रयोज्यतामिति । वयमिदानीं 'मायाश्वीयम्' इति रूपकं रङ्गे प्रयोक्ष्यामः (कर्णं-दत्वा नेपथ्ये) अरिमर्दनपाण्ड्य देवेन 'उदारास्तुरङ्गाः सङ्गृहीतव्याः' इत्याज्ञप्तः वातपुरीशनामा अमात्यः चोलदेशान् गन्तु मित एव अभिवर्तते - पराक् पराक् ।

सूत्रधारः - मन्त्रिणामन्यतमो नायं वातपुरीशः, अपि तु प्रधानमन्त्री-वासवसंसदि वाचस्पतिरिव ! । अतः अहमपि तन्मार्गा-विरोधं पालयामि (निष्क्रान्तः)

(ततः प्रविशति अमात्यः वातपुरीशः)

वातपुरीशः - अहो मम भाग्यम् यन्मधुरापुरीशः अरिमर्दनपाण्ड्यः ह्यः आस्थानमण्डपगतः मां प्रत्यादिशत् —'अमात्यवर! यथासौकर्यं प्रस्थाय चोलदेशं निकषा कावेरीतटं यत्र यत्रोदारास्तुरगास्समुपलभ्यन्ते ते यथार्हमूल्यदानेन

सङ्गृहीतव्या इति । तदहं चोलदेशान् प्रस्थितोऽस्मि । (किंचिद्दूरं गत्वा) अहो चोलदेशसमृद्धिः - पश्चिमायां दिशि प्रावृड्विमर्दः भवति चेत् उत्तरस्यां (चोलदेशपरिसरे) उत्पीडः इत्याश्चर्यम् । तत्र सह्यजा प्रवहति किल । अतः तस्याः स्वैरोपयोगः निष्प्रत्यूहं भवति । किमतस्सौभाग्यं द्रमिडदेशस्य ? । अथ च द्रमिडाः शास्त्राणि अध्येतुमध्यापयितुं च निरूढमतयः । अर्थानाहर्तुं उपभोक्तुं च समर्थाः । किमुत - स्वर्गापवर्गौ च वशे विधातुं कुशला अपि । (स्मृतिमभिनीय) कविर्वर्णयति चोलदेशम्-
स्वादीयसी यत्र कवेरजैव ततस्तरां केरफलोदकानि ।
ततस्तमां चाथ गिरां विलासाः प्रसन्नगम्भीरपदाः-कवीनाम् ।।

किं च - साऽन्यत्र सिन्धुर्ननु याऽत्र कुल्या तेऽन्यत्र धन्या इह ये कदर्याः
अभ्यस्तविद्या इव किंचित् अत्र अन्यत्र विद्यागुरवस्त एव।।

(पुरो विलोक्य)

पूर्वपयोधेः योजनतः पश्चिमं तटमुपगतोऽस्मि । (किंचिद्दूरं) गत्वा भाग्यान्मम किंचित् महेश्वरस्य क्षेत्रं दृश्यते माकन्दरम्भा वनसान्द्रं च तत् । यावत्प्रविशामि तत् । (प्रवेशमभिनीय) अहो ! प्रवेशमात्रेणात्र मम अप्राकृतिकी आध्यात्मिकी शुद्धिः भवति । (पुरो दृष्ट्वा साश्चर्यम्) साक्षादयं चन्द्रार्धशेखरः, तस्येयं मूर्तिः कारुण्यरसैकरूपा । दक्षिणामूर्तिस्वरूपेण पुर उपविष्टान् महर्षीन् मधुरैर्वचोभिः प्रबोधयत्पपि । यावत्साष्टाङ्गं नमस्करोमि ।

(नमति । चन्द्रार्धचूडस्तस्योल्बणशक्तिपातमुत्प्रेक्ष्य नैष्ठिकदीक्षामनुगृह्णाति । सद्यो वातुपुरीशः माहेश्वराश्रमी छिन्नपाशः चिन्तयति) कियत्कदर्यं मम राजसेवनम्, इतो मम महेश्वरारा - धनमेव वरम् । तदेतैर्द्रविणैः अश्वक्रयणाय आनीतैः माहेश्वरं धाम पुनर्नवीकरोमि...... (तथा करोति)

द्वितीयं दृश्यम् ।

(कायारोहण - दुश्शर्मनामानौ राजभृत्यौ प्रविशतः)

कायारोहणः - अरे क्रमुकास्य ! का वार्ता मन्त्रिणः वातपुरीशस्य? अचिरादायास्यति वा? तुरगैस्सह ।

दुश्शर्मा - समये स्मारयसि यत् समागमिष्यतां तुरगाणां घाससमृद्धिमाकाङ्क्षमाणेन राज्ञा आम्रारामात् नातिदूरे अचिरादारोपिते तृणावर्ते, शाद्वलतृणाङ्कुराणि दिने द्विवारं जलसेचनेन सम्पोषय इति आज्ञप्तोऽस्मि विभीतकेन अस्माकं गणनाथेन । समयो नास्ति वातपुरीशगवेषणे ।

कायारोहणः - अपि समागमिष्यन्ति तुरगाः मन्त्रिवर्येण क्रीताः?

दुश्शर्मा - कः संशयः

कायारोहणः - स किल महान् शिवभक्त इति श्रूयते । चोलदेशे प्रतिपदं शिवालयाः शैवमठाश्च समुल्लसन्ति । दर्शनमेव तेषां अस्मन्मन्त्रिणं विस्मारयिष्यति प्रपञ्चम् । कुतः क्रयणं तुरगाणाम्?

दुश्शर्मा - सखे ! इदमन्यत् हसितुमेवावकाशं ददाति । पश्य, श्रूयते उत्तरापथ-पारसीक-आरभाश्वलेषु तुरगोत्तमाः

समुद्भवन्ति, लभ्यन्ते चेति । अस्माकं राजा वदति - तुरगार्थं चोलान् गच्छेति, 'तथेति' प्रधानमन्त्री प्रतिष्ठते च (शनैः) मन्ये प्रतारयिष्यतीति....।

कायारोहणः - षृषृष्.... राजाज्ञा..... मा बिभेहि ।

दुश्शर्मा - इयान् कालोऽतीतः ..... नास्ति ततो वृत्तम् ! को जानाति....?

कायारोहणः - सूचनीयो राजा दुश्चेष्टितमिति ।

दुश्शर्मा - सूचित एव । आकारितवान् मन्त्रिणं दूतमुखेन ।

कारारोहणः - कीदृशः प्रतिसन्देशस्तस्य?

दुश्शर्मा - अश्वैस्सहैवागमनं स्वकीयमिति । (यवनिकाप्रक्षेपेण राजभृत्यस्सहसा प्रविश्य) भो भोः पौरजानपदाः सावधानं शृणुत - 'अश्वान्, अमूल्यान्, अमितान्, समीपं आसादितानपि राज्ञे निवेदयन्तौ.... निवेदयन्तौ ..... निवेदयन्तौ (सनिःश्वासप्रतिरोधम्) मन्त्री अश्वविक्रेता च पुरीं प्रविष्टौ इति । अहं गच्छामि तत् दृश्यं द्रष्टुम् । यूयमपि समागच्छत शीघ्रम् । (निष्क्रान्तः)

(परेद्युः पाण्ड्यासभा । राजा अरिमर्दनपाण्ड्यः संख्येय-परिवारः प्रविशति)

राजा - आः कष्टम्.... आदिनान्तात् प्रतीक्ष्यापि तुरङ्गमाणां पन्थानं .... नैव.... नैवालक्ष्यते फलम् । धिक् जाल्मं मन्त्रिणम् (नेपथ्ये कलकलध्वनिः । दूरात् अतिरिक्त-तारध्वनिः)

कृताभ्यनुज्ञैः कुपितेन राज्ञा क्रूरैश्चिरद्वेषिभिरस्य भृत्यैः ।
कदर्थ्यमानःकरुणं...... स भूयो विसृज्य धैर्यं....विललाप धीरः ।।

(क्षणानन्तरं शनैस्तारध्वनिः शाम्यति)

## तृतीयं दृश्यम्

(अपरेद्युः सङ्गवकालः । मेधातिथिः पाठशालामाणवकः सरभसं रङ्गं प्रविश्य)

मेधातिथिः - (सविस्मयम्) किमद्य जातम् ! पूर्वं विलापध्वनिः पश्चादिदानीं अश्वानामिव परुष-हेषितशब्दः श्रूयते । (बहिः निर्गत्य पश्यामि) तथा कृत्वा) हं हो ! अश्वा एव । शतसहस्रशः कुमुद - कज्जल-कुङ्कुम - दाडिमीकुसुम - हेम - कुवलयसवर्णाः अर्वाण इमे । ममाचार्यः असकृत् वदति - प्राणायामेन प्राणवायोः जये, मनो विजीयते । मनसि विजिते, जगत् किल विजीयते इति । सत्यमेव मरुतं जितवन्त एते अश्वा जगदपि विजेष्यन्ति । वेदाध्यायी अहं जानामि - वेदः उदात्तेषु आरोहति, अनुदात्तेष्ववरोहति । स्वरिते समस्वरश्च भवति, पूर्वोत्तरमीमांसाभ्यां अवधारितगतिश्च भवतीति । एवमेवैते तुरगाः आरोहावरोह - समगमनाः खलीनद्वयघटिताश्च भासन्ते । किं च एतेषां पुरतः कश्चन अतिविचित्रतेजाः विनयेनेव सर्वान् प्रसादयन् सादीव दृश्यते । राज्ञः प्रासादाभिमुखाः प्रसरन्ति

एते । (क्षणान्तरे) अहो ! प्रासादतोरणान्तः - प्रविष्टा एते इदानीम् । (राजप्रासादे द्वाःस्थान् भटान् प्रति).

अश्वसादी - (सगम्भीरम्) कः कोऽत्र भोः !

प्रतीहारी - (समुपसृत्य) स्वागतम् । नमस्तेऽस्तु.... । राज्ञे विज्ञापनीयं किमिति जिज्ञासया प्रचोद्यमानोऽयं जनः ।

अश्वसादी - राजानमरिमर्दनपाण्ड्यं संज्ञापय - यत् भवतो मन्त्रिणा अश्वविक्रयणविषये प्रार्थितः अश्वविक्रेता भवन्तं साक्षात् द्रष्टुमीहते' इति ।

प्रतीहारी - तथा (अन्तःप्रविश्य राजानं संज्ञापयति । राजा व्रीडानुतापव्यथितः वातुपुरीशं प्रसादयन् तेन सह बहिरागच्छति)

राजा - (सादिनं दृष्ट्वा स्वगतम्) अये! स्निग्धगम्भीरवेषोऽयमश्वसादी ! (प्रकाशम्) स्वागतं ते । प्रणामास्समर्प्यन्ते ।

अश्वसादी - (सस्मेरवदनः) शतशः प्रणामोपहाराः । (राज्यविषयकप्रश्नानन्तरम्)

'आनीत मासीद्धनमश्वहेतोः
(मन्त्रिणं पश्यन्) अनेन यत्ते सचिवेन राजन् !
तत्सर्वमादाय तवैव भूत्यै
मयाऽऽहृताःपश्य शिवास्तुरङ्गाः ।।

गुल्मेषु कुञ्जेषु वनोदरेषु केदारकेषूपवनेषु चामी ।
स्वच्छन्दचारा लघुविक्रमाश्च तरन्ति तोयेष्वपि दुस्तरेषु।।

न श्वोऽयमस्तीति किलाश्वशब्दः
शास्त्रैर्निरुक्तो विदितस्तवापि ।
सम्यक्परीक्ष्य त्वमिमान् गृहाण
धनं ममैतत्, तुरगास्तवैते ! ।।

राजा - सर्वं शोभनम् । इमानि स्वर्णविभूषणानि, अम्बराणि च स्वीक्रियन्तां पारितोषिकाणि । धन्योऽस्मि । (मन्त्रिणमभिमुखीकुर्वन्) मम मन्त्रिणाऽमुना सह चोलदेशप्रजाः कृतज्ञा भवन्ति, साधयामः परस्तात् ।

अश्वसादी - (सस्मितम्) धन्यतमोऽहं भवतः पारिबर्हेण प्रियवचनैश्च । आपृच्छे वः पुनर्दर्शनाय । (निष्क्रान्तः)

राजा - (पार्श्वस्थं भृत्यं प्रति) मन्दुराधिपतिः सूच्यताम् - यदिमे नूतनास्तुरगा मन्दुरायां सावधानं कुलुत्थचणकादिभिः घासैश्च समाकलितोपहारा बद्ध्यन्तामिति ।

भृत्यः - यथाऽऽदिशति चक्रवर्ती (निष्क्रान्तः)

राजा - (वातपुरीशं प्रति प्रेमाभिमानपुरस्सरम्) मान्य मन्त्रिप्रधान ! वातपुरीश्वर !

प्रियोऽसि ! दक्षोऽसि ! ममैव मन्त्रिणां

धिया प्रधानोऽसि च पाण्ड्यमण्डले ।

त्वमेव मे दक्षतरेण सादिना

तुरङ्गरत्नैश्च करोषि गौरवम् ।।

चिरं स्मरणार्हस्तवायमुपकारः । परिष्वजस्व माम् । (गाढं परिष्वजति) (आलयघण्टानादं श्रुत्वा) अतिक्रामति मध्याह्नवेला । अनन्तरकरणीयाय सज्जीभवावः । साधयामस्तावत् । (निष्क्रान्तौ)

(परेद्युः प्रातः कालः । नेपथ्ये)

'अहो धिक् । अश्वावसथे शृगालाः शृगालाः । भृत्याः ! द्रुतं समापतत समापतत'

(किंचिन्निमेषानन्तरम्) राजा — अवधत्त अवधत्त अधिकारिणः ! नेदं दुर्वत्तम् । प्रस्तुतं भक्तपारम्यम् ! (स्वगतम्) न श्वोऽयमस्तीति व्युत्पत्तिमश्वशब्दस्य स्मारितवान् अश्वसादी ! अथ च श्लेषभङ्ग्यां शिवास्तुरंगा आनीता इति च उक्तवान् हन्त ! स्मर्यतेऽधुनैव)

(सरोषम्)

'इत्थं किलेदं कृतमिन्द्रजालं अनेन नूनं मयि मन्त्रिणैव ! (अथवा)

'अयं न सामान्यमन्त्री, वस्तुतः सम्मान्यमन्त्री । 'जानाम्यहं — 'महामन्त्री माहेश्वरशक्तिशाली महाभागः । भक्तपराधनीश्च सुन्दरेश्वर इति । मङ्गलानि भवन्तु ।

(नेपथ्ये)

'वातपुरीश्वरो विजयते वातपुरीश्वरो विराजते'

मङ्गलायतने श्रंभोः दैवाद्वातपुरीश्वरः ।

निर्मुक्तः पापवृत्तेभ्यः आशास्ते सर्वमङ्गलम् ।।' (निष्क्रान्ताः सर्वे)

---

1926 2014

## HOMAGE.

## SRI MADHAVAN

सौहार्दं सौभ्रात्रं परमा करुणा च धैर्यमौदार्यम् ।
एते सुगुणा आर्ये सीमाप्राप्ताः परं समैधन्त ।।

*Nobility, fraternity, extreme compassion, courage and munificence are the impeccable virtues which converged in him and embellished him most.*

* The Madras Sanskrit College & S.S.V. Patasala
* the Savitri Ammal Oriental Higher Sdecondary School
* Ramaratnam Nursery & Primary Schoo.
* The Samskrita Academy
* The Kuppuswamy Sastri Research I nstitute.
* The Samskrita Ranga*Akshaya
* The Venkataramana Ayurveda Dispensary

(Run by Sri V. Krishnaswamy Iyer charitable Trust)
(Run by Sri V. Krishnaswamy Iyer Sanskrit Education Trust)

# श्रीरामायणे उत्तरकाण्डकथासारः । (अनुवर्तते)

—श्रीमती गौरीवेङ्कटरामः, घाटकोपर्, मुम्बई

## सभायां वाल्मीकेः सीतायाः शुद्धत्व कथनम्

अन्यस्मिन् दिने श्रीरामः वाल्मीकेः वचनानि स्मरन् सीतायाः शपथं प्रतीक्षमाणः सर्वान् महर्षीन् सभायां निमन्त्रयामास । तेषु वसिष्ठः, वामदेवः, दीर्घतमा दुर्वासाः, पुलस्त्यः, मार्कण्डेयः, गर्गः, शतानन्दः नारदः अगत्स्यः अन्ये च बहवः तपोधनाः ज्येष्ठाः, श्रेष्ठाश्च आसन् । कौतूहलसमाविष्टाः नानादेशागताः चतुर्वर्गीयाः जनाः, वानराः राक्षसाः अपि आजग्मुः ।

तदा मुनिः वाल्मीकिरपि आजगाम । तमनुगता सीताऽपि अधोमुखी, श्रुतिः ब्राह्मणानुगामिनी इव आगच्छत् ।

तदा वाल्मीकिः राघवमेवं जगाद — इयं तव पतिव्रता, धर्मचारिणी पत्नी यां त्वं जनापवादभयेन परित्यक्तवान् । अहं प्रचेतसः दशमः पुत्रः इमां प्रतिज्ञां करोमि यत् एतौ दारकौ युवयोः यमलौ सुतौ । बहुवर्षेभ्यः तपश्चरामि कदापि अनृतं नोक्तं मया । यदि मैथिली अपापा तदाऽहं स्वकर्मणः फलं भोक्ष्यामि । यदि तस्यां लोशमात्रमपि किल्बिषम् तदा मत्तपसः फलं नश्यतु । इयं सर्वप्रकारेण अपापा इति निश्चित्यैव तद्दिने अरण्ये स्वीकृता यदा त्वं तां शुद्धेति विज्ञायापि निर्जने वने लोकापवादभयात् त्यक्तवान् । तस्याः कृते अहं प्रत्ययं दास्यामि इति ऋषिः सभायां रामं निवेदयामास ।

सीतायाश्शपथः भूमिप्रवेशः च

वाल्मीकिनैवमुक्तः रामः प्रत्यवदत् 'देव, यद्भवान् वदति तत्सत्यमेव, अहं सर्वथा भवन्तं विश्वसिमि । पुरा अपि देवैः देव्याः शुद्धिप्रत्ययं प्राप्यैव सा अयोध्यामानीता । तथाऽपि लोकापवादभयात् यत्तां त्यक्तवान् तदर्थं मां क्षन्तुमर्हसि । अहं एतौ मम पुत्राविति जानामि । अतः ऋषिमुनिदेवानां सन्निधौ, शुद्धायां सीतायां मम प्रीतिरस्तु' इति ।

रामस्य वचनानि श्रुत्वा देवाः साधु साधु इति ऊचुः । वायुः सुरभिः ववौ । जनसमाजोऽपि तुष्ट आसीत् ।

तदा काषायवासिनी, प्राञ्जलिः अधोमुखी एव बभाषे, 'यदि रामादन्यं मनुसाऽपि न चिन्तयेयं तर्हि भूमिदेवी विवरं दातुमर्हति' ।

एवं सीतया भाषिते सति भूमिदेवी पृथिवीं भित्वा दिव्यसिंहासने स्थिता उत्थाय सीतायै स्वागतमुदीर्य तां च स्वासने उपावेशयत् । तदनन्तरं तां गृहीत्वा सा भूमेः विवरं विवेश । दिवौकसः तयोरुपरि पृष्पवृष्टिं चक्रुः ।

एवं सर्वेषां पुरतः शुद्धा सा सीता भूमिं विवेश ।

विस्मयमिदं दृष्ट्वा सर्वे चकिताः । केचित् सीतां प्रशशंसुः केचित् हृष्टाः, क्षणकालं यावत् समस्तं जगत् सम्मोहितम् ।

सीतायां रसातलं प्रविष्टायां, रामः आवाक्शिराः, दीनमनाः दुःखितः बभूव, ततः क्रोधशोकाभिभूतः एवं विलप्तुमारेभे अहो पूर्वं रक्षसापहृता सा पुनरानीता । अद्य धरणी देवी, सीतां मह्यं प्रतिदीयतां। नो चेत् अहमपि रसातलं प्रविश्य तत्र तया सह वत्स्यामि । अथवा विपरीतायां तु स्थित्यां वश अहं कृत्स्नां भूमिं नाशयामि इति । एवं

विलपन्तं रामं वीक्ष्य ब्रह्मा सदेवः आगत्य हे राम, क्षमस्व निजं वैष्णवं रूपं स्मर । पुनः युवयोः सङ्गमः वैकुण्ठे भविष्यति । परिषन्मध्ये वाल्मीकिना कृतं यदुत्तमं काव्यं शृणोषि, तन्मया पूर्वं श्रुतमेव । तत् तव चरितं कृत्स्नं कथयति, एतदन्यथा न भवितुमर्हति । अतः यत् भविष्यं तदपि पूर्णतया शृणु । इदं तु त्वयैव ऋषिभिस्सार्धं श्रोतव्यम् ।

एतावदुक्त्वा ब्रह्मा प्रत्यगच्छत् ।

तदा रामः अन्यानपि ब्रह्मर्षीन् भविष्यत्कथां श्रोतुकामान् वीक्ष्य वाल्मीकिं उद्दिश्यैवमुवाच मुनिपुङ्गव! - सर्वे कथाशेषं श्रीतुकामाः । अतः श्वःप्रभृति कथा पुनः प्रवर्तताम् ।

ततः ऋषिः पुत्राभ्यां सह पर्णशालां विवेश, रामोऽपि सीतां चिन्तयन् निशामनैषीत् ।

रामस्य भविष्यचरितकथनम् ।

प्रभातायां रजन्यां लवकुशौ पूर्ववत् आजग्मतुः, रामोऽपि तौ कथां कथयितुं चोदयामास । तौ कुमारौ कथां आरभेताम् - 'सीतायां भूमिं प्रविष्टायां शोकाभिभूतः रामः अस्वस्थो बभूव । ततः प्रारब्धं यज्ञं यथाविधि समाप्य, जनौघान्, पार्थिवान्, ऋषीन् वानरान्, राक्षसान् अन्यांश्च सम्मानपूर्वं विसृज्य स्वयं पुत्राभ्यां सह सीतां मनसि निधाय राजभवनम् विवेश ।

तदनन्तरं बहुवर्षसहस्राणि असंख्यान् अश्वमेध, वाजपेय, अग्निष्टोमातिरात्रादि क्रतून् च विदधानः राज्यमकरोत् प्रतिक्रतु पत्नीस्थाने कांचनमयी सीतामूर्तिः एवासीत् । रामराज्ये वसुन्धरा समृद्धा बभूव । राज्ये कोऽपि व्याधिं अकालमृत्युं वा नाप ।

अथ दीर्घकालानन्तरं तस्य मातरः क्रमेण कालधर्मं प्रापुः स्वर्गे च दशरथेन सह प्रमुदिताः ऊषुः । पृथिव्यां च रामः सर्वमातॄणाम् पितुः च यथाकालम् पितृकर्माणि विधिवत् चकार ।

एवं प्रकारेण बन्धून् हर्षयन्, क्रतून् कुर्वन्, स्वधर्मं च पालयन् रामः बहुवर्षसहस्राणि अयोध्यां शशास ।

*युधाजितः सन्देशं प्राप्य पुत्राभ्यां सेनया च सह भरतस्य गन्धर्वपुरीं जेतुं निर्गमनम्*

रामे राज्यं प्रशासति, एकदा केकयेशः युधाजित् स्वगुरुं अङ्गिरसपुत्रं गार्ग्यं नानोपायनैस्सह अयोध्यां प्रेषयामास । मुनेः आगमनं विज्ञाय रामः प्रत्युद्गम्य ऋषेः स्वागतं चकार । तदनन्तरं गृहे अर्घ्यपाद्यादिभिः संपूज्य, तेनानीतानि उपायनानि च स्वीकृत्य, विनयेनागमनकार्यं पप्रच्छ ।

तत् श्रुत्वा प्रीतः, ऋषिः युधाजितः भरतमातुलस्य सन्देशं श्रावयामास, 'सिन्धोः उभयतः पार्श्वे फलमूलसमृद्धा गन्धर्वाणां नगरी, तैरेव सुगुप्ता वर्तते । तेषां दमने त्वमेव समर्थः । यदि रोचते, तान् जित्वा तद्राज्यं स्ववशे कुरु' इति ।

तत् श्रुत्वा, भरतं दृष्ट्वा, रामः प्रत्यभाषत, भगवन् भवता सुष्ठु निवेदितम् । अयं भरतः स्वपुत्राभ्यां तक्षपुष्कलाभ्यां सह, मातुलेन च दर्शितपथा युद्धं कृत्वा, भूमिं च जेष्यति । प्राप्तां च भूमिं द्विधा विभज्य द्वौ पुत्रौ प्रशासने योजयित्वा, प्रत्यागमिष्यति इति ।

रामभाषितं श्रुत्वा ऋषिः प्रीतो बभूव । भरतः अपि रामाज्ञां शिरसा वहन् पर्याप्तधनवाहनादिभिः पुत्राभ्यां सहितः केकयं प्रति ययौ ।

गन्धर्वाणां शरीराणि बुभुक्षवः राक्षसाः भूताश्च तान् अन्वीयुः । गच्छन् क्रमेण अर्धमासानन्तरं सपरिवारः भरतः केकयं प्राप ।

*पुत्राभ्यां भरतेन नगरस्थापनम्*

केकयदेशे गार्ग्यसेनया च सह भरतागमनं श्रुत्वा, युधाजित् तत्स्वागतार्थम् नगरात् निर्ययौ ।

ततः भरतः युधाजिच्च च सहितौ गन्धर्वाणामुपरि आक्रमणं चक्रतुः । गन्धर्वा अपि समवीराः तान्दृष्ट्वा प्रत्याक्रमणं चक्रुः । द्वयोः सेनयोर्मध्ये सप्तरात्रं यावत् अस्त्रप्रत्यस्त्रवर्षयुक्तं युद्धं बभूव । तत्स्थितिं वीक्ष्य भरतः संवर्तनामकालास्त्रप्रयोगमकरोत् । तदा गन्धर्वाः कालपाशेन बद्धाः अस्त्रेण च विदारिताः अभवन्? त्रिकोटिमिता तेषां सेना नष्टा ।

एवं जयं प्राप्य भरतः गन्धर्वाणां तद्राज्यं यत् रत्नौघसंकुलं काननोद्यानशोभितमासीत् तत्स्थाने पुत्रयोः कृते द्वे राज्ये स्थापयामास । द्वे अपि राज्ये श्रिया समृद्ध्या शोभया च समाने स्तः ।

तदनन्तरं च क्रमेण गृहैः वृक्षैः जनैः सत्त्वैश्च च वर्धिते शुशुभाते ते राज्ये । तत्र तक्षशिलाख्य राज्ये तक्षः, पुष्पकलावतराज्ये च पुष्कलः स्थापितः ।

एवं कृत्वा भरतः अयोध्यां पुनरागत्य, रामाय सविस्तरं बभाषे । रामोऽपि प्रीतो बभूव ।

> आय-व्ययमुखयोः मुनिकमण्डलु निदर्शनम् ।
>
> *முனிவரின் கெண்டியை நிரப்புகிற வாய் அதன்றிருக்கும். நீரை வெளியே வார்க்கின்ற துவாரம் சிறியதாய் இருக்கும். இதுபோல் வரவின் வழி விரிந்தும், செலவின் வழி குறுகியும் அமைதல் வேண்டும் -*
>
> *---ஸாமதேவஸூரி நீதி வாக்யாம்ருதம்.*

# பவானீ பாரதி.

—*தமிழ் உரை :* P.R. **கண்ணன், நவீ மும்பை.**

समाधिधीरा हिमभूतदेहाः युगान्यनेकानि हिमाद्रिकूटे ।
ये योगिनो भारतगोप्तृरूपा ते तुष्टुवुः तां मुदिता महान्तः ॥

(ப.உ) हिमाद्रिकूटे = இமயமலைச் சிகரங்களில், समाधिधीराः = சமாதியில் முழுதும் ஆழ்ந்துள்ள, हिमभूतदेहाः = தேகமே பனியாக ஆகியுள்ள, ये = எந்த, महान्तः = மகான்களான, योगिनः = யோகிகள், अनेकानि = அநேக, युगानि = யுகங்களில், भरतगोप्तृरूपाः = பாரதத்தைக் காப்பாற்றிக் கொண்டிருப்பவர்களாய் இருந்தார்களே, ते = அவர்கள், मुदिताः = பெரும் சந்தோஷத்துடன், तां = அந்த தேவியை, तुष्टुवुः = ஸ்துதி செய்தனர்.

(பொ—உ) இமய மலைச் சிகரங்களில் ஸமாதியில் முழுதும் ஆழ்ந்துள்ள, தேகமே பனியாக ஆகியுள்ள, மகான்களான யோகிகள், பாரத தேசத்தைக் காப்பாற்றும் அரண்களாக இருந்துகொண்டு, பெரும் சந்தோஷத்துடன் அந்த தேவியைத் துதித்தனர்.

(வி—உ) தொன்று தொட்டு, இமாலயம் பாரத தேசத்திற்கு ஒருஇயற்கையான யாராலும் எளிதில் உட்புகமுடியாத அரணாக அமைந்துள்ளது. அந்த இமாலயத்திற்கு ஆத்ம சக்தி ஊட்டுபவர்களாய் யோகிகள் காலவரையின்றி பல யுகங்களாய் ஸமாதியில் ஆழ்ந்துபோய் தேவியிடம் லயித்து விடுகின்றனர். அப்போது பனிசூழ்ந்த இமாலய சிகரப் பிரதேசங்களில் பல யுகங்கள் தியானத்தில் இருக்கும் அவர்களை பனி மூழ்க் கெண்டு, பனியோடு பனியாக, உடல் நினைவு சிறிதும் இல்லாமல் தியானம் சிறிதும் கலையாமல் அந்த மாபெரும் யோகிகள் தவம் செய்கின்றனர். அந்த ஆத்ம

சக்தி பாரதத்திற்கு அரணாக அமைவதில் ஆச்சரியம் ஒன்றுமில்லை. இப்போது, தேவியின் ஆயிரம் கோடி சூரியப் பிரகாசத்தால் அவர்களுடைய தியானம் சிறிது சிறிதாக கலையத் தொடங்கியது. அவர்கள் இருக்கும் இமாலயச் சிகரங்களின் மிக அருகிலேயே வடதிசையில் தேவியானவள் ஆகாசத்தில் அவதரித்ததால், அவர்களுடைய தியானம் கலையத் தொடங்கியது. தேவியின் ஸாந்நித்தியத்தை உணர்ந்த யோகிகள், தாங்கவொண்ணு சந்தோஷத்துடன் ஸ்தோத்திரம் செய்கின்றனர. கவியின் வர்ணனை மிகவும் அனுபவிக்கக் கூடியதாக அமைந்துள்ளது.

ज्ञानाकरेभ्यो हि विलोचनेभ्यो हिमानि मन्दं युगसञ्चितानि ।
उत्सार्य देवीं अथ भीमकान्तिं महाप्रतापा बलिनीं अगायन् ॥

*(ப—உ)* अथ = மேலும், महाप्रतापाः = அதி மேன்மை தாங்கிய அவர்கள், ज्ञानाकरेभ्यः = ஞானச் சுரங்கங்களாகிய, विलोचनेभ्यः = கண்களிலிருந்து, युगसञ्चितानि = பல யுகங்களில் சேர்ந்துள்ள, हिमानि = பனியை, मन्दं हि = மெதுவாக, उत्सार्य = அப்புறப்படுத்தி, भीमकान्तिं = பெரு காந்தியுடைய, बलिनीं = பலம் பொருந்திய, देवीं = தேவியை, अगायन् = கானம் செய்தனர்.

*(பொ—உ)* மேலும், அதி மேன்மை தாங்கிய அவர்கள் தங்கள் ஞானச் சுரங்கங்களாகிய கண்களிலிருந்து, பல யுகங்களில் சேர்ந்துள்ள பனியை மெதுவாக அப்புறப்படுத்தி, அதீத காந்தியும், பலமும் பொருந்திய தேவியை (ஸ்தோத்திரமாக) கானம் செய்தனர்.

*(வி—உ)* துர்கா ஸப்தசதியில், மகிஷாஸுரவதத்திற்காக தேவி புறப்பட்டபோது

"तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्तयः ।" *(2:35)*

"பக்தியின் பணிவே உருக்கொண்டவர்களான முனிவர்கள் இந்த தேவியைத் துதித்தனர்."

முனிவர்கள் பலயுகங்களாக கண்மூடி ஸமாதியில் இருந்தபோது, அகக் கண்ணால் தேவியை இதய கமலத்தில் தரிசனம் செய்து, இருமையற்று, தேவியுடன் ஐக்கியமாகி ஆனந்தசாகரத்தில் திளைத்துக் கொண்டிருந்தனர். இப்போது வெளியில் தேவியின் ஆவிர்ப்பாவத்தை ஸாந்நித்திய சக்தியால் உணர்ந்து கொண்ட அந்த யோகிகள், வெளிக் கண்களின் மீது படிந்திருக்கும் பனியை அகற்றி, தேவியை வெளியில் தரிசனம் செய்து துதி செய்கின்றனர். அகக் கண்ணாலும், புறக் கண்ணாலும் தேவியையே தரிசனம் செய்த அவர்களுடைய கண்களை ஞானச்சுரங்கங்கள் என்று கவிஞர் வர்ணிப்பதில் ஆச்சரியமில்லை.

तुभ्यं नमो देवि विशालशक्त्यै नमामि भीमां बलिनीं कृपालुम् ।
त्वमेव वै तारयसीह जातीः ऊर्जस्वलायै नम आदिदेव्यै ॥

(ப—உ) देवि = தேவியே, विशालशक्त्यै = பெரும் சக்தியாகிய, तुभ्यं नमः = உனக்கு நமஸ்காரம் भीमां = பயங்கரமானவளை, बलिनीं = பலம் பொருந்தியவளை, कृपालुं = கிருபை செய்பவளை, नमामि = நமஸ்கரிக்கிறேன், त्वं एव वै = நீதானே, इह = இங்கே, जातीः = குடிமக்களை, तारयसि = காப்பாற்றுகிறாய், ऊर्जस्वलायै = மிகவும் சக்தி வாய்ந்தவளான, आदिदेव्यै = ஆதிதேவிக்கு, नमः = நமஸ்காரம்.

(பொ—உ) (யோகிகளின் துதி) தேவியே ! விசால சக்தியாகிய உனக்கு நமஸ்காரம். பயங்கரமானவளை, பலம் பொருந்தியவளை, க்ருபை செய்பவளை நமஸ்கரிக்கிறேன். நீதானே இங்கு குடிமக்களைக் காப்பாற்றுகிறாய் மிகவும் சக்தி வாய்ந்தவளான ஆதிதேவிக்கு நமஸ்காரம்.

(வி—உ) நாம் யாரிடம் சரணாகதி செய்கிறோமோ, அவருக்கு சக்தியும், பலமும் இருப்பது எவ்வளவு அவசியமோ, அதைவிட

அவசியம் கிருபை செய்யும் பாங்கு. ஜனங்களைக் காப்பாற்றுவதில் தேவிக்கு இணையாருமில்லை.

துர்காஸப்தசதியில், மகிஷாஸுர வதத்திற்குப் பின்னர், தேவர்கள் தேவியை ஸ்தோத்திரம் செய்தனர்.

"दुर्गे स्मृता हरसि भीतिं अशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःख भयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ॥" (४:१७)

"தாண்டமுடியாத கஷ்டத்தில் நினைக்கப்பட்டால், நீ எல்லா ஜீவர்களுடைய பயத்தையும் போக்குகிறாய். இன்பத்தில் ஸ்மரிக்கப்பட்டால், நலன்மிக்க மதியை அளிக்கிறாய். ஏழ்மை, துக்கம், பயம் எல்லாவற்றையும் போக்குபவளே! எல்லோருக்கும் உபகாரம் செய்ய எப்போதும் உருகும் நெஞ்சுடையவர் உன்னைத் தவிர யார் உளர்?

कस्ते बलं वर्णयितुं समर्थो देवि प्रचण्डे करपल्लवेन ।
एकेन हि भ्रामयसे रुणत्सि विश्वं सतारार्कं अनन्तवीर्ये ॥

*(ப—உ)* प्रचण्डे देवि = *மிகுந்த பலம் பொருந்திய தேவியே!* कः = *யார்,* ते बलं = *உன் பலத்தை,* वर्णयितुं = *வர்ணிப்பதற்கு,* समर्थः = *திறமையுள்ளவர்,* अनन्तवीर्ये = *எல்லையற்ற வீர்யம் கொண்டவளே!* एकेन = *ஒரே,* करपल्लवेन हि = *தளிர்போன்ற கரத்தினாலேயே,* सतारार्कं = *நக்ஷத்திரங்களும், சூரியனும் சேர்ந்த,* विश्वं = *உலகத்தை,* भ्रामयसे = *சுழற்றுகிறாய்,* रुणत्सि = *தாங்கவும் செய்கிறாய். நிலை நிறுத்தவும் செய்கிறாய்!*

*(பொ—உ)* தேவீ பாகவதத்தில், மணித்வீபத்தில் தேவியைத் தரிசனம் செய்த மகாவிஷ்ணு ஸ்தோத்திரம் செய்கிறார்.

''नाहं भवो न च विरिंचिः विवेद मातः कोऽन्यो हि वेत्ति चरितं तव दुर्विभाव्यम् । (३:४:३५)

''உன்னுடைய, யாரும் அறியவொண்ணு சரித்திரத்தை நாளுே, சிவளுே, பிரம்மாவோ அறியமாட்டோம். வேறு யார் அறியக் கூடும்.'' பகவத் கீதையிலும் பகவான் சொல்கிருர்.

''ईश्वरः सर्वभूतानां हृद्देशे अर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।। (१८.६१)

''ஈச்வரன், எல்லா ஜீவர்களின் ஹ்ருதயப் பிரதேசத்தில் இருக்கிருர். அர்ஜுனு, அவர் எல்லா உயிர்களேயும் எந்திரத்தில் ஏற்றப்பட்டாற்போல, மாயையினுல் சுழற்றி இயக்குகிருர்''.

आजौ यदा नृत्यसि चण्डि घोरे शृगालघुष्टे दधती त्रिशूलम् ।
स्पर्शेन कम्पन्त इवायुधस्य महान्ति तारानियुतानि नाके ।।

*(ப—உ)* घोरे = பயங்கரமான, चण्डि = சண்டிகையே, यदा = எப்போது, शृगालघुष्टे = நரிகள் ஊளேயிடும், आजौ = யுத்த பூமியில், त्रिशूलं = திரிசூலத்தை, दधती - தரித்துக் கொண்டு, नृत्यसि = நடனமாடுகிருயோ, आयुधस्य = ஆயுதத்தின், स्पर्शेन = ஸ்பரிசத்திஞல், नाके = ஆகாசத்தில், महान्ति = ஏராளமான, तारानियुतानि = கோடிக் கணக்கான நக்ஷத்திரங்கள், कम्पन्त इव = நடுங்குவனபோலும்.

*(பொ—உ)* பயங்கரமான சண்டிகையே ! நீ எப்போது நரிகள் ஊளேயிடும் யுத்த பூமியில் திரிசூலத்தை தரித்துக் கொண்டு நடனமாடுகிருயோ, அப்போது உன் ஆயத ஸ்பரிசத்திஞல் ஆகாசத்தில் ஏராளமான கோடிக் கணக்கான நக்ஷத்திரங்கள் நடுங்குவனபோலும்.

*(வி—உ)* துர்காஸப்தசதியில், ரக்த பீஜ வதகட்டத்தில் :
''नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः । प्राप्ता तत्र सटाक्षेपक्षिप्त

नक्षत्रसंहतिः'' (८:२०) 'நரசிம்மத்திற்கொப்பான உடல் தாங்கிக் கொண்டு, பிடரியின் சிலிர்ப்பால் நக்ஷத்திரக் கூட்டங்களை உலுக்கிக் கொண்டு அங்கு நாரஸிம்மிவந்தாள்'

दयार्द्रचित्ता रुदितेन पुंसां हंसि प्रजापीडकमस्तकेषु ।
यो मृत्युरत्ता भुवनस्य रौद्रः स किङ्करस्ते वसति त्रिशूले ।।

(ப—உ) पुंसां = மனிதர்களுடைய, रुदितेन = அழுகைக் குரலால், दयार्द्रचित्ता = தயையினுல் நனைந்த சித்தமுடைய நீ, प्रजापीडकमस्तके = பிரஜைகளைத் துன்புறுத்துவோரின் சிரங்களில், हंसि = தாக்குகிருய், भुवनस्य = உலகை, अत्ता = சார்ப்பிடும், यः = எந்த, रौद्रः = பயங்கரமான, मृत्युः = யமன், உள்ளானே सः = அவன், किङ्करः = வேலைக்காரனுக, ते = உன்னுடைய, त्रिशूले = திரிசூலத்தில், वसति = வசிக்கிருன்.

(பொ—உ) மனிதர்களின் அழுகைக்குரலால் தயையினுல் நனைந்தசித்தமுடைய நீ, ப்ரஜைகளைத் துன்புறுத்துவோரின் சிரங்களில் தாக்குகிருய். உலகையெல்லாம் விழுங்கும் பயங்கரமான யமன் உன் வேலைக்காரனுக உன் திரிசூலத்தில் வசிக்கிருன்.

(வி—உ) தேவீ பாகவத்தில், யமதர்மராஜன் ஸாவித்திரியிடம் தேவியின் மாகாத்மியம் பற்றிப் பேசுகையில் இவ்வாறு சொல்கிருர்.

''यदाज्ञया वर्षतीन्द्रो मृत्युश्चरति जन्तुषु । यदाज्ञया दहेद्वह्निः जलमेवं सुशीतलम् ।।

''எந்த தேவியின் ஆக்ஞையால் இந்திரன் மழை பொழிகிருனே, யமன் உயிர்களில் நடமாடுகிருனே, எந்த தேவியின் ஆக்ஞையால் அக்கினி எரிகிறதோ, ஜலமானது குளிர்ச்சியாக இருக்கிறதோ.''

# श्रीमत्परशुरामायणम् । (अनुवर्तते)

—डा. N. सुब्रह्मण्यशास्त्री, पोन्नूरु, गुण्टूरु

परीक्षायै शिवागमनम्

सर्वान्ता रमते साक्षी निर्गुणश्चन्द्रशेखरः ।
आगात्परीक्षितुं रामं विलासाय निरागसम् ॥ ६१

जटाः पिच्छा मयूरस्य भूतिः पौष्पं रजो बभौ ।
वैयाघ्रं चर्म काषायं तार्तीयीकाक्षि कुङ्कुमम् ॥ ६२

भीषयन् क्रूरभूतानि भक्तान् विस्मापयञ्छिवः ।
कल्पयन् स्पृहयतां भीतिं ग्रीष्मे पुष्ये रविर्बभौ ॥ ६३

राममागत्य चाब्रूत भूतेशोऽहं शिवङ्करः ।
नानुप्राप्तं मामकीनं वचो नास्मि सहे चरम् ॥ ६४

किंनामा? कुत आयातः? तपस्सात्त्विकमास्थितः?
धनू रौद्रं बिभर्षि त्वं चन्दनद्रुर्व सर्पभाक् ॥ ६५

पर्जन्यगर्जासंतर्जाद्भूखण्डादिव विद्रुमः ।
शिववाक्याद्राममुखादुद्बभूव वचोङ्कुरः ॥ ६६

व्याध भार्गवशिष्योऽहं रामनामा द्विजार्भकः ।
तपे रौद्रास्त्रसम्प्रात्यै शिवाय कृतनिश्चयः ॥ ६७

इत्युक्तमाह गौरीशः तप्येऽहं प्रियडिम्भक! ।
त्वदीयव्यवसायो मे भात्ययं सैकते द्रवः ॥ ६८

चेतनः कस्स्थाणुमीयात्? उग्रं कस्सान्त्वयेन्नरः?
कपालभृच्छ्मशानस्थः भूतिमेवाभियच्छति ॥ ६९

अणोरपि परं यत्सः दृश्यो नैवानुयायिभिः ।
शरत्पयोदानुस्रुतिः तत्सेवा त्यज्यतामिति ।। ७०

ब्रुवाणमेवमाक्षिप्य भ्रुकुट्या भीषयन् जगौ ।
पुण्यश्लोकस्य माहात्म्यं दधीचिरिव दक्षकम् ।। ७१

कर्णौ पिधाय तमब्रूत् पादुकां च स्मरन् गुरुम् ।
शिवनिन्दा न कर्तव्या नरैः श्रेयोभिलाषिभिः ।। ७२

ईशस्सर्वस्य जगतः भूतेशश्च सदाशिवः ।
बहिस्तमश्शुद्धमन्तर्नो जानाति विना शिवम् ।। ७३

स्थाणुभूतेषु सर्वेषु द्युसत्स्वमृतभक्षिषु ।
हालाहलं ग्रसन्नासीत् महादेव इतीरितः ।। ७४

सर्वप्राणिषु सम्प्रोता चितिस्तस्यैव चाकृतिः ।
तं बुध्वा ना बुद्धिमान्स्यात् सर्वस्य प्राणनं शिवः ।। ७५

छेत्तास्मन्मोहवन्धानामेतस्मादस्ति को घृणी?
स्मृतिमात्रात्समागन्ता रक्षस्स्वपि वरप्रदः ।। ७६

दत्ते भक्त्या समासेव्यः काङ्क्षामभ्यर्थनाधिकाम् ।
रसोल्बणो महातेजाः पचेलिमरसालवत् ।। ७७

कपालं ज्ञानमाबिभ्रत्परं वैराग्यमाश्रितः ।
महाकालः कालयन्ता श्मशाने भगवान् चरः ।। ७८

महीध्रभेदिवार्धारास्यसहस्रयसम्मिताम् ।
जटास्वबध्नाद्गङ्गां तां देवो मृत्युञ्जयस्तु सः ।। ७९

इति दृढेच्छं वक्तारं विहस्येशस्स्वराड्विराट् ।
चन्द्रिकाभस्मधवलो बभावीशस्सुधाकरः ।। ८०

संस्तूय तं गिरिशरं भवमात्मयोनिम्
अङ्घ्र्योः पपात पुलकैर्व्यपनीतखेदः ।
रौद्रास्त्रजालममितं परिधर्तुमैश्यम्
त्वं वाञ्छसि प्रमद चेत्कुरु सत्तपांसि ॥ ८१

लोकाभिराम इति शङ्करवाक्यनुन्नः
चित्तं पवित्रितमितस्तपसाऽनिलेन ।
वाचः फणीशगदितादिति संविचिन्त्य
तीर्थाभिसञ्चरणतस्तनुमीप्सुरिष्टाम् ॥ ८२

*॥ इति श्रीपरशुरामजननं नाम तृतीयस्सर्गस्समाप्तः ॥*

सोऽधिकारी यः स्वामिना सति दोषे सुखेन निगृहीतुं शक्यते । न तं कमाप्यधिकुर्यात्, सत्यपराधे यमुपहत्य अनुशयीत । सम्बन्धिनो न कुर्यात् अधिकारिणः । स ज्ञाति भावेनाक्रम्य सामवायिकान्, सर्वमप्यर्थं ग्रसते ।

குற்றம் காணப்படின் எளிதில் தண்டிக்கக் கூடியவனையே அதிகாரியாக ஆக்க வேண்டும். குற்றமிருந்தும் தண்டித்தபின் வருந்தநேருமாகில் அவனை அதிகாரியாக ஆக்காதே. உள்ளூர், உறவினரை அதிகாரியாக்காதே. தன்னுடன் பணிபுரிபவரையும் உறுவினர் என்ற முறையில் வசப்படுத்தி எல்லா செல்வத்தையும் அழித்துவிடுவான்.

—ஸோமதேவஸூரி - நீதி வாக்யாம்ருதம்.

# ललाटे लिखिता रेखा ।

डा.टि. नारायन् कुट्टि, चेन्नै

वदनकान्तिप्रवर्धने अलकानां प्रभूतं स्थानमस्ति । 'अळकाश्चूर्णकुन्तलाः' इत्यमरकोशे । ललाटपार्श्वयोः उपरि वा 'अलिः' इव विद्यमानत्वात् 'अळक' इत्युच्यते । कुटिलकुन्तलस्वरूपत्वात् हृदि स्थितं कुटिलत्वं द्योत्यते इति केचन वदन्ति । स्थिररूपेण ललाटिकां दृगन्तं च आवृत्य स्थितो भवति । स्वाभाविकरीत्या कुञ्चितः वक्रः वेल्लितश्चेत् स एव अळकः । यथा मल्लिनाथः — 'स्वभाव - वक्राण्यलकानि तासां' इति । 'ललाटिकाचन्दनधूसराळका...' (कुमारसंभवं ५.५५) इति कालिदासो वदति । अतः 'अळकः' (न स्त्रियां इति कोशे) ललाटपट्टपर्यन्तम् । 'अलके बालकुन्दानुविद्धं' (मे.स. ६५) इति मेघसन्देशे । 'ते ललाटे भ्रमरकाः' इति अमरकोशे । अतः भ्रमरप्रतीतिजनकः एव अलकः । अळकवक्रत्वाभावे कृत्रिमवक्रत्वं सम्पादयति । यतः अळकः लक्ष्मीमावहति । यथा — 'विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः' (भामिनीविलासः २.१०) इति ।

पुरुषस्य न केवलं आकर्षत्वमाकल्यते किं तु ईश्वरस्यपि सगुणस्य । यथा — 'कुटिलकुन्तलवृन्तजुष्टं' (भागवत ३.२८.३०) । ललाटः शोभते अलकेन । अलकः शोभते ललाटेन च । मुखं शोभते ललाटालकाभ्याम् । ललाटशब्दः 'लल ईप्सायां' इत्यस्मात् व्युत्पन्नम् । 'ललाट मलिकं गोधिरूर्ध्वो' इत्यत्र, अलिकशब्दस्यार्थोऽलंकार इति । तस्मिन् ललाटे 'कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभम्'

इति । ललाटफलके अळकाविव अतिरमणीया अळका नाम नगरी विराजते । किमर्थं उदकमण्डलं वा, डार्जिलिङ् वा, सिङ्गपुरं वा गच्छेत्? प्रत्युत !गन्तव्या ते वसतिरळका नाम यक्षेश्वराणाम्' ।

गुरुवायुपुराधीश्वरस्य अलककान्तिं मेल्पुत्तूर् नारायणभट्टतिरिः साक्षात् वर्णयति । 'नीलाभं कुञ्चिताग्रं घनममलतरं संयतं चारुभङ्ग्या' इति । तथापि ऊर्ध्वपुण्ड्रेन बालफालेन्दुवीथी नितरां शोभते । यथा—

'स्निग्धश्वेतोर्घपुण्ड्रामपि च सुललितां
फालबालेन्दुवीथीम्' । (ना.१००.२)

बहुत्र तल्ललाटरमणीयता वर्णितपूर्वा एव पुराणेषु, तथापि एकमुदाहरणम्—

प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम्
सुकपोलसुविस्तीर्णललाटफलकोज्ज्वलम् ॥

(वि.पु.६.७.८०)

ललाटस्य कान्तिः तत्रस्थतिलकेनेति नूनम् ।
"...मूर्ध्वतिलकप्रोद्भासिफालान्तरम्" (ना.२.१)

त्र्यम्बकस्य शिवस्य ललाटपट्टे जाज्वल्यमानं तार्तीयीकं लोचनं राराज्यते । तस्मादेव ईश्वरत्वं, यथा—

अनुद्यल्ललाटाक्षितेजःप्ररोहै—
रवास्फुरच्चारुवामोरुशोभैः ।
अनङ्गभ्रमद्भोगिभूषाविशेषै-
रचन्द्रार्धचूडैरलं दैवतैर्नः । (शिवभुजङ्गः)

अपि च—

'करालभालपट्टिकाधगद्धगद्धगज्ज्वलद्....' *(शिवताण्डवस्तोत्रं)*

अस्माकं फालपट्टके किमस्ति? तिलकमपि?... न, क्लिश्यामः। अस्माकं 'ललाटलिखिता रेखा केनापि मार्जयितुं न शक्यते'। ललाटरेखां अत्येतुं ईश्वरोऽपि न शक्त इति कविः कल्पयति—

चञ्चत्कुण्डलिमण्डलास्यजमरुत्-प्रोद्दीप्तकालानल-
ज्वालातप्तविभावरीशविगलत् पीयूषधारागणैः ।
सप्राणं तु तरक्षुचर्मवसनं दृष्ट्वाऽतिभीते वृषे
मा भैषीरिति भाषितं विजयते चण्डीपतेस्ताण्डवे ।।

ताण्डवसमये चञ्चलायमाने फणिराजे, तस्य शीत्कारवायुना तृतीयनेत्रस्थः अङ्गारः ज्वालारूपेण प्रज्वालितः। ज्वालाजिह्वया मौलिस्थः बालेन्दुः द्रवीभूतः अभवत्। द्रवीकृतया तया अमृतधारया शिवेन वेष्टितं हरिणचर्म सजीवमभवत्। समुत्थितं हरिणं दृष्ट्वा वृषः भयभीतः। तदानीं मा भैषीः' इत्युक्त्या शिवः तं समाश्वासयति। तादृशः शिवः नः मङ्गलं तनोतु।

एतादृशं कविकल्पनासंपुष्टं वैभवं अनुभवितुं अस्माकं रसानुभवयोग्यशिरोरेखा (ललाटरेखा) अस्तु इति प्रार्थयामहे।

किं तया गवा या न क्षरति क्षीरम्।
किं तेन प्रसादेन यो न पूरयत्याशाम्।।

பால் கறக்காத பசு பயனற்றது. எதிர் பார்த்ததைத் தராதவனது பரிவும் பயனற்றது.

–நீதி வாரம்ருதம்

# किरातार्जुनीये प्रथमसर्गे

## षोडशः श्लोकः

अनेकराजन्यरथाश्वसङ्कुलम् तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥

पदच्छेदः — अनेकराजन्यरथाश्वसङ्कुलं, तदीयं, आस्थाननिकेतनाजिरं, नयति, अयुग्मच्छदगन्धिः, आर्द्रतां, भृशं, नृपोपायनदन्तिनां, मदः ॥ (९ पदानि)

## शब्दधातुरूपाणि

अनेकराजन्यरथाश्वसङ्कुलं - अनेकराजन्यरथाश्वसङ्कुलं सङ्कुले श्व-सङ्कुलानि अकारान्त नपुंसलिङ्गशब्दस्य प्रथमैकवचनम् ।

आस्थाननिकेतनाजिरं - आस्थाननिकेतनाजिरं, अजिरे, अजिराणि - अकारान्त - नपुंसकलिङ्गशब्दस्य प्रथमैकवचनम् ।

नयति - नयति नयतः नयन्ति 'णीञ् प्रापणे' धातोः लटि प्रथमपुरुषैकवचनम् ।

अयुग्मच्छदगन्धिः - अयुग्मच्छदगन्धिः गन्धी गन्धयः - इकारान्त - पुल्लिङ्ग - शब्दस्य - प्रथमैकवचनम् ।

आर्द्रतां - आर्द्रतां आर्द्रते आर्द्रताः - आकारान्त स्त्रीलिङ्गाब्दस्य - द्वितीयैकवचनम् ।

भृशं - अव्ययपदम्

नृपोपायनदन्तिनां - नृपोपायनदन्तिनः दन्तिनोः दन्तिनां - नकारान्त - पुल्लिङ्गशब्दस्य षष्ठीवहुवचनम् ।

मदः - मदः मदौ मदाः - अकारान्त - पुल्लिङ्गशब्दस्य प्रथमैकवचनम् ।

### प्रतिपदार्थः

नृपोपायनदन्तिनां - அரசர்களால் காணிக்கையாகத் தரப்பட்ட, யானைகைகளின், अयुग्मच्छदगन्धिः - ஏழிலே பாலே மரத்தினது பூக்களின் வாசனே போன்ற வாசனேயுடைய, मदः - மதநீர், अनेकराजन्यरथाश्वसङ्कुलम् - பல ராஜகுமாரர்களின் ரதங்கள், குதிரைகள் இவைகளால் நிரம்பிய, तदीयं = துர்யோதனின், आस्थाननिकेतनाजिरं - ஆஸ்தான மண்டபத்தின் முன்னுள்ள முற்றத்தை, भृशं - மிகவும், आर्द्रतां - ஈரமுடையதாக இருக்கும் நிலேயை, नयति - அடைவிக்கின்றது.

### व्याकरणविशेषः

अनेकराजन्यरथाश्वसङ्कुलं - राज्ञां जात्यपत्यानि पुमांसः राजन्याः क्षत्रियाः इति । अनेके च ते राजन्याः च अनेकराजन्याः । रथाश्च अश्वाश्च रथाश्वम् । अनेकराजन्यानां रथाश्वं - अनेकराजन्यरथाश्वं, तेन सङ्कुलं, अनेकराजन्यरथाश्वसङ्कुलम् । तदीयं - तस्य इदम् । आस्थाननिकेतनाजिरम् । आस्थानस्य निकेतनं - आस्थाननिकेतनम् । आस्थानिकेतनस्य अजिरम्, आस्थाननिकेतनाजिरम् । अयुग्मच्छदगन्धिः - न युग्मः, अयुग्मः । अयुग्माः छदाः अस्य इति अयुग्मछदः अयुग्मच्छदस्य विकारः पुष्पम् अयुग्मच्छदम् ।

अयुग्मच्छदस्य गन्धः इव गन्धः यस्यासौ अयुग्मच्छदगन्धिः ।
नृपोपायनदन्तिनां - नृपाणाम् उपायनानि ये दन्तिनः तेषाम् ।
आर्द्रताम् - आर्दस्य भावः, ताम् ।

कोषः - 'उपायनमुपग्राह्यमुपहारस्तथोपदा ।'
'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' ॥

'अतिवेलभृशात्यर्थंतिमात्रोद्गाढनिर्भरम् ।'

भावार्थः

भक्तैः बहुभिः नृपतिभिः बहवो गजाः दुर्योधनाय उपायनीकृताः । ते च आस्थानमण्डपाङ्गणे अवस्थापिता विद्यन्ते । तेषां गण्डप्रदेशात् स्रवत् मदजलं राजकुमाराणां तत्र मिलितानां रथाश्वादिभिः व्याप्तं अजिरं आर्द्रं करोति । अनेन दुर्योधनस्य समृद्धिरुक्ता ।

'श्री रङ्गनाथशर्मा - सं.वि. समितिः - काञ्चीपुरम् ।

एकस्मिन् पूर्णं अन्यस्मै कृशं तुल्यगुणोदये ।
भेदाद्यदर्पितं रागद्वेषदानेन तेन किम्? ॥

தானம் பெறுபவர் இருவர், தகுதியும் மேன்மையும் ஒரேவிதம்தான் இருவருக்கும். ஒருவருக்கு நிரம்பவும் மற்றொருவருக்கு குறைவாகவும் - இப்படி வேற்றுமையுடமன் தானம் அளிக்கப்படுமாஞல் விருப்பிற்கும் வெறுப்பிற்கும் உட்பட்ட அந்த தானத்தால் என்ன லாபம்?

--க்ஷேமேந்த்ரர் - ஸூக்திமாலா

# मुक्तकमौक्तिकानि ।

—श्री सुन्दरराजः, I.A.S. (Retd.,) भुवनेश्वरम्

*भगवति प्रत्यङ्मुखे प्रार्थना*

अवाङ्मुखत्वं भवतस्स्वधर्मः ।
पराङ्मुखत्वं भवतः प्रसिद्धम् ।
अवाङ्मुखं वाङ्मुखिनं ततो मां
प्रत्यङ्मुखत्वात् भगवन् ! विदध्याः ।। १

*नित्यनमस्यो नारायणः*

एको द्वित्वेऽनुषङ्गी त्रिदिवमधिगतो यश्चतुर्धा विभक्तः
पञ्चास्यष्षड्गुणाढ्योऽहरहरिरिव सत्सप्तजिह्वोऽष्टमूर्तिः ।
नव्यो दिव्यः पुराणो दशदिशि सुभगैकादशीद्वादशीद्धो
नित्यं स्तुत्यो नमस्यो दशशतशुभनामा स नारायणो नः ।। २

*अस्ति कश्चित् निरंतरभोगी चिरन्तन?*

पुण्यात् धर्मेण लब्धं धनमुचितमितो धर्मकार्ये नियोक्तुं
याचद्दीनाय दातुं तदुपरि तु यथाशक्ति शेषं यथाऽर्हम् ।
तस्मादेवावशिष्टं स्वजनपरिजनैः धर्मतो भोक्तुमर्हः
पुण्यश्लोकेन दृष्टस्स चिरमनपयद्धोगभोगी भुवि स्यात् ।। ३

*जयदेवकविः*

जयतु स जयदेवकविः जयतु तदीयं च गीतगोविन्दम् ।
जयतु कलिङ्गराज्यं जयतु तथेदं च भारतं राष्ट्रम् ।। ४

जयते सत्यमेवेति जयशब्दमुदीरयन् ।
जयदेवसमारोहे जयते कविसुन्दरः ॥ ५

स (प्र) पद्य नुष्टुप्

जयदेवकवेः काव्यं जगन्नाथदयोदितम् ।
जयदेवगृहे पाठः जययुक्तोऽस्य युज्यते ॥ ६

ईदृशं मधुरं काव्यं ईदृशं संगमं सताम् ।
मादृशां मानसातीतं मधुमाधवमेलनम् ॥ ७

हरेर्नृत्यं न्वभूत् पूर्वं कवेर्गानं न्वतःपरम् ।
कवेर्गानं न्वभूत् पूर्वं हरेर्नृत्यं न्वतःपरम् ॥ ८

इति दोलायमानस्य ध्यायतो मधुसूदनम् ।
प्रसन्नमनसो जातं स्पष्टीकरणमद्भुतम् ॥ ९

आनंदाय स्वभक्तानां आत्मनोऽप्यनुभूतये ।
प्रभुस्सृजति काव्यं च कविं च युगपद्युगे ॥ १०

अपारं स्वमिवानंतं अमीमांस्यमतद्विदाम् ।
गीतगोविन्दकाव्यं तत् पीताम्बरसपीतिमत् ॥ ११

जयदेवकवेः काव्यं जगन्नाथस्य दर्शनम् ।
अहो भाग्यमिदं नृणां औत्कलानां विशेषतः ॥ १२

*भावदर्शिनी बाला*

बाला केयं कज्जलपक्ष्मा श्लक्ष्णेनाक्ष्णा दर्शितभावा ।
रागं स्वगिरा किरती मधुरा लोला तालैर्नूपुरशब्दैः ॥ १३

चम्पकान्योक्तिः

रे रे चम्पकवृक्ष पुष्पितशिखो भास्येवमुच्चावचः
तिष्ठन्नन्यकृते सुमं त्ववितरन् व्यर्थं किमर्थं वद ।
देवालङ्करणाय पूजनकृते चाप्राप्यदूरे हि तत्
धम्मिल्ले धरणाय यन्मृगदृशां नामोददानाय सत् ।। १४

*श्रीतातपादैः स्वयं प्रार्थयद्भिरिव रचितःकवेः श्लोकः*

करधृतनवनीतं नर्तने वर्तमानं
कनकरुचिरलक्ष्मीं बिभ्रतं विभ्रमेण ।
मणिभिरगणितैराकल्पिनं कल्पवृक्षं
मनसि वचसि चाक्ष्णि न्यस्य नित्योऽस्मि भृत्यः ।। १५

*कालिन्दी कस्य हेतोः प्रवहति?*

इतः कालिन्दीयं सलिलमिदमस्याश्शिशिरयत्
इतस्तस्यास्तीरे पुलिनमपि पुण्यं सुविमलम् ।
यतः कृष्णः पूर्वं कृतविहरणस्संतरणकृत्
गतं मृग्यन्ती सा हरिविरहिता किं प्रवहति? ।। १६

*किमर्थं धर्मनेतारोपि नीरवा न भूत्वा निजनिजमतप्रकटनकृतः?*

हताहतमतामतैः स्वमतवान्तिकृन्नेतृभिः
स्वतन्त्रमपि भारतं बहुविवादविक्षोभितम् ।
इह स्वबलदर्पतो दशमुखोऽहरन्मैथिलीं
नरेट्सदसि नग्निता स्वधवसम्मुखे द्रौपदी ।। १७

# तिरुक्कुरल् - संस्कृतश्लोकरूपानुवादः ।

–भूतपूर्ववानमामलैमठम्-स्वामी ।

## ५२. परीक्षितैः कार्यकरणम् - அதிகாரம் 52

### தெரிந்து வினையாடல்.

நன்மையும் தீமையும் நாடி நலம்புரிந்த
தன்மையான் ஆளப் படும். 1

कार्याणां साध्वसाधूनि फलान्यालोच्य साधुना ।
परीक्षितेन सुहितेनात्र कर्माणि कारयेत् ।। १

வாரி பெருக்கி வளம்படுத்து உற்றவை
ஆராய்வான் செய்க வினை. 2

विस्तार्याऽऽयपथान् सम्यग्वृद्धिमार्गस्य कण्टकान् ।
अपनेतुं कृतमतिः नृपार्थं कार्यमाचरेत् ।। २

அன்புஅறிவு தேற்றம் அவாஇன்மை இந்நான்கும்
நன்குஉடையான் கட்டே தெளிவு. 3

प्रेमभावो नृपे, प्रज्ञा, नीरागत्वं, स्थिरा मतिः ।
इदंगुणैश्चतुर्भिश्च युक्ता योग्याः क्रियाविधौ ।।। ३

எனைவகையான் தேறியக் கண்ணும் வினைவகையான்
வேறுஆகும் மாந்தர் பலர். 4

सम्यक् सर्वप्रकारैश्च परीक्ष्य ग्रहणेऽपि हि ।
कार्ये संयोजनात्पश्चाद्भिन्नास्स्युर्बहवो भुवि ।। ४

அறிந்துஆற்றிச் செய்கிற்பாற்கு அல்லால் வினைதான்
சிறந்தான்என்று ஏவற்பாற்று அன்று. 5

उपायान् बाधकांश्चैव विचार्याचरणे क्षमान् ।
विहाय कार्याण्यन्येभ्यः प्रदानं न हितावहम् ।। ५

செய்வானை நாடி வினைநாடிக் காலத்தோடு
எய்த உணர்ந்து செயல். 6

कार्याचरणशक्तश्च नरं कार्यविधां तथा ।
कालौचित्यमपि ज्ञात्वा कर्तव्यस्याचरणं वरम् ।। ६

இதனை இதனால் இவன்முடிக்கும் என்று ஆய்ந்து
அதனை அவன்கண் விடல். 7

कर्मैतत् साधनेनानेनायं साधयितुं क्षमः ।
इत्यालोच्य क्रियां तां हि तस्मै दद्यान्महीपतिः ।। ७

வினைக்குஉரிமை நாடிய பின்றை அவனை
அதற்குரியன் ஆகச் செயல். 8

स्वकार्यसाधनायैकं विचार्य वृणुयान्नृपः ।
ततः पश्चाद्धि तं कुर्यात्पूर्णं तत्राधिकारिणम् ।। ८

வினைக்கண் வினையுடையான் கேண்மை வேறாக
நினைப்பானை நீங்கும் திரு. 9

सदा प्रयत्नशीलान् हि स्वकर्मसु नरान् नृपः ।
यद्यन्यथात्र मन्येत श्रीर्निर्गच्छेत् ततो नृपात्? ।। ९

நாள்தோறும் நாடுக மன்னன் வினைசெய்வான்
கோடாமை கோடாது உலகு. 10

कार्यसाधनदक्षाणां ऋजुतां श्रयते भुवः ।
ऋजुता तत्क्रिया राजा पत्यहं चिन्तयेत् ।। १०

अत्र ते हृदयं वेद सत्यस्यानृतस्य च ।
कल्याणं वद साक्ष्येण माऽऽत्मानमवमन्यथाः ।।

—ஆதிபர்வ மஹாபாரதம்

# नूतनशासितृभ्यः वयं किमपेक्षामहे ?

*एस्.हिरिहरः, सं.वि.स. नङ्गल्लूर्,*

अस्मिन् संवत्सरे ('२०१४) गतद्वित्रेषु मासेषु भारतदेशे देशपरिपालनार्थं जननायकरीत्या निर्वाचनं सम्पन्नं, निर्वाचितपक्षोऽपि शासनाधिकारे नियुक्तः । 'एतेभ्यः शासितृभ्यः अस्माकमपेक्षाः काः' इति विषयः श्रीमद्रामायणमाधारीकृत्य अत्र विमृष्टः भवति ।

श्रीमद्रामायणणे अयोध्याकाण्डे भरतस्य चित्रकूटं प्रति आगमनं, तत्र श्रीरामदर्शनं च वर्णितमस्ति । तत्र श्रीरामस्य भरतं प्रति कुशलप्रश्नव्याजेन राजनीतेरुपदेशः च वर्णितः अस्ति । एषः 'कच्चित् सर्गः' इति श्रीरामायणप्रवक्तृभिः कथितः वर्तते । अस्मात् सर्गात् भरतशासनम् अधिकृत्य श्रीरामस्य अपेक्षाः सङ्गृह्य यत्र उच्यन्ते । एताः एव अस्माकमपेक्षाः इति उपस्थापयितुमिष्यते । 'कच्चित्' इति पदं ""I think" ""I hope" इति अर्थं सूचयति ।

(१) मन्त्रधरैः शास्त्रकोविदैः अमात्यैः सुसंवृतः मन्त्रः हि शासनस्य विजयमूलमिति शासितृणाम् अवगमनं भवेत् ।

(२) शासितृभिः एकः वा बहुभिः सह मन्त्रणं न क्रियेत । एवं मन्त्रितः मन्त्रः देशे यथा न परिधावति तथा आचर्येत ।

(३) चिन्तितं कार्यं परिशुद्धमूलं महोदयं च भवेत् । एतत् विनिश्चित्य क्षिप्रमपि कृतं भवेत् ।

(४) सर्वकार्येषु सुकृतानि एव अन्यैः वेद्यानि भवितव्यानि । अन्यानि कृतरूपाणि कर्तव्यानि न वेद्यानि भवेयुः ।

(५) एतैः शासितृभिः मन्त्रितं तर्कैः वा अनुमानेन वा परिकीर्तितं न भवेत् ।

(६) मूर्खाणां सहस्रापेक्षया एकः पण्डितः सम्भावितः भवेत् यतः एषः पण्डितः एव कार्यकृच्छ्रेषु महत् निःश्रेयसं कुर्यात् ।

(७) मेधावी, शूरः परिशुद्धः विचक्षणः एव देशं महतीं श्रियं प्रापयेत् ।

(८) महत्सु कार्येषु मुख्याः मध्यमे मध्यमाः, जघन्येषु जघन्याः च योजिताः भवेयुः ।

(९) शुचयः, उपधातीताः (देशभक्तिः, निष्कामत्वं, जितेन्द्रियत्वं, धैर्यं चेति विषयेषु यत् परीक्षणं कर्तव्यं तत् कृतं येषां ते उपधा-अतीताः), श्रेष्ठाः अधिकारिणः कर्मसु नियोजनीयाः ।

(१०) प्रजाः उग्रेण (अन्यायेन) दण्डेन उद्वेजिताः न भवेयुः ।

(११) सर्वकारः (Government) उग्रप्रतिग्रहीता (Unjust/Excess Tax collector) न भवेत् ।

(१२) सर्वकारः ऐश्वर्यकामं, प्रजादूषकं वञ्चकं हन्यात् । नो चेत् सर्वकारः हतः भवति ।

(१३) सेनानानयकाः, युद्धविशारदाः, बलवन्तः विक्रान्ताः, दृष्टापदानाः सत्कृत्य मानिताः भवेयुः ।

(१४) कृषिगोरक्षाजीविनः, व्यापारे संश्रिताः सर्वकारस्य दयिताः भवेयुः।

(१५) सर्वकारस्य आयः (Income) विपुलः, व्ययः (Expenditure) अल्पतरः च भवेत् ।

(१६) चोरकर्मणा, लोभात् क्षारितः (Falsely Accused) विशुद्धात्मा, शुचिः, आर्यः शास्त्रकुशलैः अपृष्टः एव (अविचार्य एव) शिक्षितः न भवेत् ।

(१७) काले गृहीतः सकारणः, पृष्टः, दृष्टः एव चोरः धनलोभात् न मुच्येत ।

(१८) अमात्याः सर्वे देशक्षेमार्थं विरागाः पक्षपातरहिताः च भवेयुः ।

(१९) मिथ्याभिशस्तानां पतन्ति अस्राणि सर्वकारं घ्नन्ति इति सर्वकारः अवगच्छेत् ।

(२०) गुरवः, वृद्धाः, सिद्धार्थाः, तापसाः ब्राह्मणाः, देवताः, अतिथयः, अश्वत्थः इत्यादयः पुण्यवृक्षाः नताः भवेयुः ।

(२१) अर्थेन, प्रीतिलोभेन, कामेन वा धर्मार्थौ बाधितौ न भवेताम् ।

(२२) प्रजाः, सर्वशास्त्रार्थकोविदाः, ब्राह्मणाः च सर्वकारस्य श्रेयः आशंसेरन् ।

(२३) नास्तिक्यम्, अनृतं, क्रोधः, प्रमादः दीर्घसूत्रता, ज्ञानवतामदर्शनं आलस्यं, पञ्चेन्द्रियवशे पतनं, राजकार्याणां स्वायत्तचिन्तनं, मूर्खैः सह मन्त्रणं, निश्चितानाम् अनारम्भः, मन्त्रस्य अपरिरक्षणं, मङ्गलस्य अप्रयोगः, सर्वतः प्रत्युत्थानं चेति एते चतुर्दशदोषाः वर्जिताः भवेयुः ।

(२४) देशे वेदाः सफलाः भवेयुः, क्रियाः सफलाः भवेयुः, शास्त्रविद्या च सफला भवेत् ।

(२५) सत्पथगा, शुभा, पूर्वजैः अनुष्ठिता वृत्तिः अनुष्ठिता भवेत् ।

(२६) भारतदेशः सुनिविष्टजनाकुलः, यागशालाभिः, देवस्थानैः , तटाकैः च जुष्टः उपशोभितः, प्रहृष्टनरनारीकः, समाजोत्सवशोभितः, सुकृष्टसीमा, पशुमान्, हिंसाभिः अभिवर्जितः, सर्वभयैः परित्यक्तः, पापैः नरैः विवर्जितः सुरक्षितः, स्फीतः च यथा भवति तथा नूतनशासितारः देशं परिपालयन्तु इति वयमपेक्षामहे ।



Laser composing : V.K.N. Enterprises, 9840217036